# प्रश्नोत्तररत्नमालिका

https://sa.wikisource.org/s/1s8i
॥श्रीः॥
॥प्रश्नोत्तररत्नमालिका॥

कः खलु नालंक्रियते दृष्टादृष्टार्थसाधनपटीयान्।
अमुया कण्ठस्थितया प्रश्नोत्तररत्नमालिकया॥ 1॥

भगवन्किमुपादेयं गुरुवचनं हेयमपि च किमकार्यम्।
को गुरुरधिगततत्त्वः शिष्यहितायोद्यतः सततम्॥ 2॥

त्वरितं किं कर्तव्यं विदुषां संसारसंततिच्छेदः।
किं मोक्षतरोर्बीजं सम्यक्ज्ञानं क्रियासिद्धम्॥ 3॥

कः पथ्यतरो धर्मः कः शुचिरिह यस्य मानसं शुद्धम्।
कः पण्डितो विवेकी किं विषमवधीरणा गुरुषु॥ 4॥

किं संसारे सारं बहुशोऽपि विचिन्त्यमानमिदमेव।
किं मनुजेष्विष्टतमं स्वपरहितायोद्यतं जन्म॥ 5॥

मदिरेव मोहजनकः कः स्नेहः के च दस्यवो विषयाः।
का भववल्ली तृष्णा को वैरी यस्त्वनुद्योगः॥ 6॥

कस्माद्भयमिह मरणादन्धादिह को विशिष्यते रागी।
कः शूरो यो ललनालोचनबाणैर्न च व्यधितः॥ 7॥

पातुं कर्णाञ्जलिभिः किममृतमिह युज्यते सदुपदेशः।
किं गुरुताया मूलं यदेतदप्रार्थनं नाम॥ 8॥

किं गहनं स्त्रीचरितं कश्चतुरो यो न खण्डितस्तेन।
किं दुःखमसंतोषः किं लाघवमधमतो याच्ञा॥ 9॥

किं जीवितमनवद्यं किं जाड¬ं पाठतोऽप्यनभ्यासः।
को जागर्ति विवेकी का निद्रा मूढता जन्तोः॥ 10॥

नलिनीदलगतजलवत्तरलं किं यौवनं धनं चायुः।
कथय पुनः के शशिनः किरणसमाः सज्जना एव॥ 11॥

को नरकः परवशता किं सौख्यं सर्वसङ्गविरतिर्या।
किं सत्यं भूतहितं प्रियं च किं प्राणिनामसवः॥ 12॥

कोऽनर्थफलो मानः का सुखदा साधुजनमैत्री।
सर्वव्यसनविनाशे को दक्षः सर्वथा त्यागी॥ 13॥

किं मरणं मूर्खत्वं किं चानर्घं यदवसरे दत्तम्।
आमरणात्कि शल्यं प्रच्छन्नं यत्कृतं पापम्॥ 14॥

कुत्र विधेयो यत्नो विद्याभ्यासे सदौषधे दाने।
अवधीरणा क्व कार्या खलपरयोषित्परधनेषु॥ 15॥

काहर्निशमनुचिन्त्या संसारासारता न तु प्रमदा।
का प्रेयसी विधेया करुणा दीनेषु सज्जने मैत्री॥ 16॥

कण्ठगतैरप्यसुभिः कस्य ह्यात्मा न शक्यते जेतुम्।
मूर्खस्य शङ्कितस्य च विषादिनो वा कृतघ्नस्य॥ 17॥

कः साधुः सद्वृत्तः कमधममाचक्षते त्वसद्वृत्तम्।
केन जितं जगदेतत्सत्यतितिक्षावता पुंसा॥ 18॥

कस्मै नमांसि देवाः कुर्वन्ति दयाप्रधानाय।
कस्मादुद्वेगः स्यात्संसारारण्यतः सुधियः॥ 19॥

कस्य वशे प्राणिगणः सत्यप्रियभाषिणो विनीतस्य।
क्व स्थातव्यं न्याय्ये पथि दृष्टादृष्टलाभाढ¬े॥ 20॥

कोऽन्धो योऽकार्यरतः को बधिरो यो हितानि न श्रृणोति।
को मूको यः काले प्रियाणि वक्तुं न जानाति॥ 21॥

किं दानमनाकाङ्क्षं किं मित्रं यो निवारयति पापात्।
कोऽलंकारः शीलं किं वाचां मण्डनं सत्यम्॥ 22॥

विद्युद्विलसितचपलं किं दुर्जनसंगतिर्युवतयश्च।
कुलशीलनिष्प्रकम्पाः के कलिकालेऽपि सज्जना एव॥ 23॥

चिन्तामणिरिव दुर्लभमिह किं कथयामि तच्चतुर्भद्रम्।
किं तद्वदन्ति भूयो विधूततमसा विशेषेण॥ 24॥

दानं प्रियवाक्सहितं ज्ञानमगर्व क्षमान्वितं शौर्यम्।
वित्तं त्यागसमेतं दुर्लभमेतच्चतुर्भद्रम्॥ 25॥

किं शोच्यं कार्पण्यं सति विभवे किं प्रशस्तमौदार्यम्।
कः पूज्यो विद्वद्भिः स्वभावतः सर्वदा विनीतो यः॥ 26॥

कः कुलकमलदिनेशः सति गुणविभवेऽपि यो नम्रः।
कस्य वशे जगदेतत्प्रियहितवचनस्य धर्मनिरतस्य॥ 27॥

विद्वन्मनोहरा का सत्कविता बोधवनिता च।
कं न स्पृशति विपत्तिः प्रवृद्धवचनानुवर्तिनं दान्तम्॥ 28॥

कस्मै स्पृहयति कमला त्वनलसचित्ताय नीतिवृत्ताय।
त्यजति च कं सहसा द्विजगुरुसुरनिन्दाकरं च सालस्यम्॥ 29॥

कुत्र विधेयो वासः सज्जननिकटेऽथवा काश्याम्।
कः परिहार्यो देशः पिशुनयुतो लुब्धभूपश्च॥ 30॥

केनाशोच्यः पुरुषः प्रणतकलत्रेण धीरविभवेन।

इह भुवने कः शोच्यः सत्यपि विभवे न यो दाता॥ 31॥

किं लघुताया मूलं प्राकृतपुरुषेषु या याच्ञा।
रामादपि कः शूरः स्मरशरनिहतो न यश्चलति॥ 32॥

किमहर्निशमनुचिन्त्यं भगवच्चरणं न संसारः।
चक्षुष्मन्तोऽप्यन्धाः के स्युर्ये नास्तिका मनुजाः॥ 33॥

कः पङ्गुरिह प्रथितो व्रजति च यो वार्धके तीर्थम्।
किं तीर्थमपि च मुख्यं चित्तमलं यन्निवर्तयति॥ 34॥

किं स्मर्तव्यं पुरुषैर्हरिनाम सदा न यावनी भाषा।
को हि न वाच्यः सुधिया परदोषश्चानृतं तद्वत्॥ 35॥

किं संपाद्यं मनुजैर्विद्या वित्तं बलं यशः पुण्यम्।
कः सर्वगुणविनाशी लोभः शत्रुश्च कः कामः॥ 36॥

का च सभा परिहार्या हीना या वृद्धसचिवेन।
इह कुत्रावहितः स्यान्मनुजः किल राजसेवायाम्॥ 37॥

प्राणादपि को रम्यः कुलधर्मः साधुसङ्गश्च।
का संरक्ष्या कीर्तिः पतिव्रता नैजबुद्धिश्च॥ 38॥

का कल्पलता लोके सच्छिष्यायार्पिता विद्या।
कोऽक्षयवटवृक्षः स्याद्विधिवत्सत्पात्रदत्तदानं यत्॥ 39॥

किं शस्त्रं सर्वेषां युक्तिर्माता च का धेनुः।
किं नु बलं यद्धैर्यं को मृत्युर्यदवधानरहितत्वम्॥ 40॥

कुत्र विषं दुष्टजने किमिहाशौचं भवेदृणं नणाम्।
किमभयमिह वैराग्यं भयमपि किं वित्तमेव सर्वेषाम्॥ 41॥

का दुर्लभा नराणां हरिभक्तिः पातकं च किं हिंसा।
को हि भगवत्प्रियः स्याद्योऽन्यं नोद्वेजयेदनुद्विग्नः॥ 42॥

कस्मात्सिद्धिस्तपसो बुद्धिः क्व नु भूसुरे कुतो बुद्धिः।
वृद्धोपसेवया के वृद्धा ये धर्मतत्त्वज्ञाः॥ 43॥

संभावितस्य मरणादधिकं किं दुर्यशो भवति।
लोके सुखी भवेत्को धनवान्धनमपि च किं यतश्चेष्टम्॥ 44॥

सर्वसुखानां बीजं किं पुण्यं दुःखमपि कुतः पापात्।
कस्यैश्वर्यं यः किल शंकरमाराधयेद्भक्त्या॥ 45॥

को वर्धते विनीतः को वा हीयेत यो दृप्तः।
को न प्रत्येतव्यो ब्रूते यश्चानृतं शश्वत्॥ 46॥

कुत्रानृतेऽप्यपापं यच्चोक्तं धर्मरक्षार्थम्।
को धर्मोऽभिमतो यः शिष्टानां निजकुलीनानाम्॥ 47॥

साधुबलं किं दैवं कः साधुः सर्वदा तुष्टः।
दैवं किं यत्सुकृतं कः सुकृती श्लाघ्यते च यः सद्भिः॥ 48॥

गृहमेधिनश्च मित्रं किं भार्या को गृही च यो यजते।
को यज्ञो यः श्रुत्या विहितः श्रेयस्करो नृणाम्॥ 49॥

कस्य क्रिया हि सफला यः पुनराचारवाञ्शिष्टः।
कः शिष्टो यो वेदप्रमाणवान्को हतः क्रियाभ्रष्टः॥ 50॥

को धन्यः संन्यासी को मान्यः पण्डितः साधुः।
कः सेव्यो यो दाता को दाता योऽर्थितृप्तिमातनुते॥ 51॥

किं भाग्यं देहवतामारोग्यं कः फली कृषिकृत्।
कस्य न पापं जपतः कः पूर्णो यः प्रजावान्स्यात्॥ 52॥

किं दुष्करं नराणां यन्मनसो निग्रहः सततम्।
को ब्राह्मचर्यवान्स्याद्यश्चास्खलितोर्ध्वरेतस्कः॥ 53॥

का च परदेवतोक्ता चिच्छक्तिः को जगत्भर्ता।
सूर्यः सर्वेषां को जीवनहेतुः स पर्जन्यः॥ 54॥

कः शूरो यो भीतत्राता त्राता च कः स गुरुः।
को हि जगद्गुरुरुक्तः शंभुर्ज्ञानं कुतः शिवादेव॥ 55॥

मुकिं्त लभेत कस्माद्#्मुकुन्दभक्तेर्मुकुन्दः कः।
यस्तारयेदविद्यां का चाविद्या यदात्मनोऽस्फूर्तिः॥ 56॥

कस्य न शोको यः स्यादक्रोधः किं सुखं तुष्टिः।
को राजा रञ्जनकृत्कश्च श्वा नीचसेवको यः स्यात्॥ 57॥

को मायी परमेशः क इन्द्रजालायते प्रपञ्चोऽयम्।
कः स्वप्ननिभो जाग्रद्व्यवहारः सत्यमपि च किं ब्राह्म॥ 58॥

किं मिथ्या यद्विद्यानाश्यं तुच्छं तु शशविषाणादि।
का चानिर्वचनीया माया किं कल्पितं द्वैतम्॥ 59॥

किं पारमार्थिकं स्यादद्वैतं चाज्ञता कुतोऽनादिः।
वपुषश्च पोषकं किं प्रारब्धं चान्नदायि किं चायुः॥ 60॥

को ब्राह्मणैरुपास्यो गायत्र्यर्काग्निगोचरः शंभुः।
गायत्र्यामादित्ये चाग्नौ शंभौ च किं नु तत्तत्त्वम्॥ 61॥

प्रत्यक्षदेवता का माता पूज्यो गुरुश्च कस्तातः।
कः सर्वदेवतात्मा विद्याकर्मान्वितो विप्रः॥ 62॥

कश्च कुलक्षयहेतुः संतापः सज्जनेषु योऽकारि।
केषाममोघवचनं ये च पुनः सत्यमौनशमशीलाः॥ 63॥

किं जन्म विषयसङ्गः किमुत्तरं जन्म पुत्रः स्यात्।
कोऽपरिहार्यो मृत्युः कुत्र पदं विन्यसेच्च दृक्पूते॥ 64॥

पात्रं किमन्नदाने क्षुधितं कोऽर्च्यो हि भगवदवतारः।
कश्च भगवान्महेशः शंकरनारायणात्मैकः॥ 65॥

फलमपि भगवद्भक्तेः किं तल्लोकस्वरूपसाक्षात्त्वम्।
मोक्षश्च को ह्यविद्यास्तमयः कः सर्ववेदभूरथ चोम्॥ 66॥

इत्येषा कण्ठस्था प्रश्नोत्तररत्नमालिका येषाम्।
ते मुक्ताभरणा इव विमलाश्चाभान्ति सत्समाजेषु॥ 67॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभग-
वत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ
प्रश्नोत्तररत्नमालिका संपूर्णा॥